मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳ सुहुतं करोतु नः स्वाहेति ॥ २४ ॥ अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतꣳ संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥

---

न्सहस्रमित्याद्यावापस्थाने ॥ २४ ॥

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखं वाग्वागिति त्रिर्जपेत् । अथ दधि मधु घृतं संनीयानन्तर्हितेनाऽव्यवहितेन जातरूपेण हिरण्येन प्राशयेत्येतैर्मन्त्रैः प्रत्येकम् ॥ २५ ॥

अथास्य नामधेयं करोति वेदोऽसीति । तदस्य तद्गुह्यं नाम भवति. वेद इति ॥ २६ ॥

---

पितरि ये प्राणाः सन्ति तान्पुत्रे त्वयि मनसा समर्पयामीत्याह । मयीति । अत्यरीरिचमित्यतिरिक्तं कृतवानस्मीह कर्मण्यकरमकरवं तत्सर्वं विद्वानग्निः स्विष्टं करोत्विति स्विष्टकृद्भूत्वा स्विष्टमनधिकं सुहुतमन्यूनं चाऽस्माकं करोत्वित्यर्थः ॥ २४ ॥

अस्य जातस्य शिशोरित्यर्थः । त्रयीलक्षणा वाक्त्वयि प्रविशत्विति जपतोऽभिप्रायः । एतैर्मन्त्रैर्भूस्ते दधामीत्यादिभिरिति शेषः ॥ २५ ॥

वेदनाम्ना व्यवहारो लोके नास्तीत्याशङ्क्याऽऽह । तदस्येति । यत्तद्वेद इति नाम तदस्य गुह्यं भवति । वेदनं वेदोऽनुभवः सर्वस्य निजं स्वरूपमित्यर्थः ॥ २६ ॥

---

१ च. ढ. °र्मण्यत्य° । २ च. भूस्त्वयि । ३ च. °वस्त्वयि द° । ४ च. स्वस्त्वयि । ५ क. च. ख. ढ. °य स्वमु° । ६ ख. छ. °यति भूस्त्वयि दधामीति°। ग. घ. ज. ढ. °यति भूस्ते दधामीत्याद्यैर्मं° । ७ ख. छ. ञ. ढ. °नं वाऽस्मा° । ८ ख. छ. ढ. वागिह प्र°।

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे कैरिति ॥ २७॥ अथास्य मातरमभिमन्त्रयते। इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति। तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा

---

अथैनं मात्रे प्रदाय स्वाङ्कस्थं स्तनं प्रयच्छति यस्ते स्तन इत्यादिमन्त्रेण ॥ २७ ॥

अथास्य मातरमभिमन्त्रयत इलाऽसीत्यनेन। तं वा एतमाहुरित्यनेन विधिना जातः पुत्रः पितरं पितामहं चातिशेत इति श्रिया यशसा

---

हे सरस्वति यस्ते स्तनः शशयः[1] शयः फलं तेन सह वर्तमानो यश्च सर्वप्राणिनां स्थितिहेत्वन्नभावेन जातो यश्च रत्नधा अन्नस्य पयसो वा दाता यश्च वसु कर्मफलं तद्विन्दतीति वसुवित्। यश्च सुष्ठु ददातीति सुदत्रो येन च स्तनेन विश्वा विश्वानि वार्याणि वरणीयानि देवादीनि भूतानि त्वं पुष्यसि तं स्तनं मदीयपुत्रस्य धातवे पानाय मदीयभार्यास्तने प्रविष्टं कुर्वित्यर्थः ॥ २७ ॥

इला स्तुत्या भोग्याऽसि। मित्रावरुणाभ्यां संभूतो मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणी सा चारुन्धती तद्वत्त्वं तिष्ठसीति भार्यां संबोधयति। मैत्रावरुणीति। वीरे पुरुषे मयि निमित्तभूते भवती वीरं पुत्रमजीजनत्। सा त्वं वीरवती जीवबहुपुत्रा भव। या भवती वीरवतः पुत्रसंपन्नानस्मानकरत्कृतवतीति मन्त्रार्थः। पितरमतीत्य वर्तत इत्यतिपिता। अहो महानेष विस्मयो यत्पितरं पितामहं च सर्वमेवं वंशमतीत्य सर्व-

---

१ च. संशयो। २ घ. ज. क इति। ३ च. इडाऽसि। ४ घ. च. ज. ढ. °स्थं तनयं स्त°। ५ ङ. इडाऽसी°। ६ क. ख. घ. ङ. च. छ. ज. झ. ढ. °ह वाऽति°। ७ घ. ञ. ण. सशयः। ८ क. ख. घ. छ. ढ. °यः फ°। ९ ख. छ. ढ. °न स्त°। १० ख. छ. ढ. °मेवं स्वम°।

ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथवंशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पा-

---

ब्रह्मवर्चसेन परमां निष्ठां प्रापदित्येवं स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते स चैवं स्तुत्यो भवतीत्यध्याहार्यम्॥२८॥ इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् । गुणवान्पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरंपरा कीर्त्यते ।

---

स्मादधिकस्त्वं जातोऽसीत्यर्थः । न केवलं पुत्रस्यैवेयं स्तुतिरपि तु यथोक्तपुत्रसंपन्नस्य पितुरपीत्याह ।.यस्येति ॥ २८ ॥ इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

सांनिध्यात्खिलकाण्डस्य वंशोऽयमिति शङ्कां निवर्तयन्वंशब्राह्मणतात्पर्यमाह । अथेति । विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि नास्य पृथक्त्वभागित्वं खिलत्वेन तच्छेषत्वात् । तथा च समाप्तौ पठितो वंशः समस्तस्यैव प्रवचनस्य भविष्यतीत्यर्थः । पूर्वौ वंशौ पुरुषविशेषितौ तृतीयस्तु स्त्रीविशेषितस्तत्र किं कारणमित्याशङ्क्याऽऽह । स्त्रीप्राधान्यादिति । तदेव स्फुटयति । गुणवानिति । कीर्त्यते

---

१ घ. °स्य प्रत्येकं भ° ।

राशरीपुत्रो वार्त्सीपुत्राद्वार्त्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वा-

---

तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत् । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रस्ता-

---

ब्राह्मणेनेति संबन्धः । शुक्लानि यजूंषीत्यस्य व्याख्यानमव्यामिश्राणीति दोषैरसंकीर्णानि पौरुषेयत्वदोषद्वाराभावादित्यर्थः । अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः । पाठक्रमेण मनुष्यादिः प्रजापतिपर्यन्तो वंशो व्याख्यातः । संप्रत्यर्थक्रममाश्रित्याऽऽह । प्रजापतिमिति । अधोमुखत्वं पाठक्रमापेक्षयोच्यते । तत्रापि प्रजापतिमा-

---

१ घ. ठ. 'दर्भीपु' । २ घ. ठ. 'दर्भीपु' । ३ ख. ट. ड. कार्षके' । ४ ख. ट. ड' त्कार्षके' । ५ ख. घ. ङ. ट. ठ. ड. ढ. 'त्रात्प्राश्नीपुत्रादा' । ६ घ. छ. ज. ट. 'सुरीवा' । ७ क. 'वाऽयातयामानी' ।

वाम्बाध्योगोऽसितावार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥ समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो

---

वदधोमुखो नियताचार्यपूर्वक्रमो वंशः समानमा सांजीवीपुत्रात् । ब्रह्मणः प्रवचनाख्यस्य । तच्चैतद्ब्रह्म प्रजापतिप्रबन्धपरंपरयाऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै

---

रभ्य सांजीवीपुत्रपर्यन्तं वाजसनेयिशाखासु सर्वास्वेको वंश इत्याह । समानमिति । प्रवचनाख्यस्य वंशात्मनो ब्रह्मणः संबन्धात्प्रजापतिर्विद्यां लब्धवानित्याह । ब्रह्मण इति । तस्याधिकारिभेदादवान्तरभेदं दर्शयति । तच्चेति । प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परंपरा तयेति यावत् । तस्य परमात्मरूपं स्वयंभूत्वमभिदधाति । अनादीति । तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि । नित्यमिति । आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति मन्वानः सन्नाह । तस्मै

---

१ ग. घ. ज. झ. ढ. °र्यपर्व° । २ क. ख. छ. झ. °णः । प्र° । ३ घ. ञ. ण. °तिप्रमु° । ४ घ. ञ. ण. °रूपस्व° । ५ क. ख. ढ. प्रसारि° ।

ब्रह्म स्वयंभु ब्रह्मणे नमः ॥४॥ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः॥६॥

इति वाजसनेयकबृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥ ८ ॥

---

ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ६ ॥

---

ब्रह्मणे नम इति ॥ १ ॥ २॥ ३ ॥ ४ ॥ इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य पञ्चमं वंशब्राह्मणम् ॥ ५ ॥

नमो जन्मादिसंबन्धहेतुविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुर्भृते ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति ... महंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥ ६ ॥

---

१ क. 'बन्धिविघ्नवि' । ख. छ. ढ. 'बन्धिहे' । २ ञ. 'न्धवन्धवि' ।

समाप्तेयं सटीकशांकरभाष्योपेता बृहदारण्यकोपनिषत् ।

॥ ॐ तत्सत् ॥

# अथ बृहदारण्यकोपनिषत्कण्डिकाद्यपदानां वर्णानुक्रमः प्रारभ्यते ।

## वर्णानुक्रमः ।






समाप्तोऽयं वर्णानुक्रमः ।

